# E-Text

पत्रस्य नाम : महाभाष्यम् (1,2,3 आह्निकानि)

पत्रस्य संख्या : **II**

पाठ्यांशस्य नाम : शब्दार्थसंबन्धानां नित्यत्वविचारः

पाठ्यांशस्य संख्या : 11

पाठ्यांशतत्त्वानि :

1) शब्दस्य नित्यत्वानित्यत्वविचारः।
2) शब्दार्थ संबन्धानां नित्यत्वप्रतिपादनम्।
3) सिद्धशब्दस्य मङ्गलार्थकत्वम्।

विषयसूची

## 1.0 प्रस्तावना

ध्वनिव्यङ्ग्यः वर्णात्मकः शब्दः नित्यः इति मीमांसकाः अभिप्रयन्ति। वैयाकरणमते वाक्यस्फोटात्मकः शब्दः नित्यः। ध्वनिरेव शब्दः, स च अनित्यः इति वैशेषिकाः। अतः कः पक्षः युज्यतेतमामिति प्रश्नः, शब्दस्य नित्यत्वे, अनित्यत्वे वा लक्षणं तु प्रवर्तनीयमेवेति समाधानम्, भगवान् पाणिनिः शब्दार्थसंबन्धानां न कर्ता, किन्तु स्मर्ता एव इति निरूपणम्, सिद्धशब्दस्य नित्यपर्यायत्वमनित्यपर्यायत्वं वर्तते इति प्रतिपाद्य प्रकृते सिद्धे शब्दार्थसंबन्धे इति वार्तिके तु सिद्धशब्दः नित्यपर्यायवाचीति प्रतिपादनम्, मङ्गलार्थं वार्तिककृता सिद्धशब्दः उच्चारितः – इत्याद्यंशाः अत्र पाठे विचार्यन्ते।

## 2.0 शब्दनित्यत्वानित्यत्वशङ्का

**किं पुनर्नित्यः शब्दः, आहोस्वित् कार्यः?**

अयमाशयः-ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दं मन्यन्ते मीमांसकाः। वर्णव्यतिरिक्तं पदस्फोटं नित्यं शब्दमिच्छन्ति वैयाकरणाः। अपरे च वैयाकरणाः वाक्यस्फोटं नित्यं शब्दं संगिरन्ते। [पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात् तेषां पदानामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तदाशयः।] एवं स्थिते ध्वनिरेव शब्दः, स च कार्यः, तद्व्यतिरेकेण अन्यस्य शब्दस्य अनुपलम्भादिति वैशेषिकादयः अभिप्रयन्ति। अतः सर्वेषां मतानामेतेषां परिशीलनात् परं संशयोऽयमुत्पद्यते यथा - **किं पुनः शब्दः नित्यः भवति, आहोस्वित्**=अथवा **कार्यः**=अनित्यः? इति। नियतं भवः इत्यर्थे नि शब्दात् ‘त्यब् नेर्ध्रुवे’ इति वार्तिकेन त्यप् प्रत्यये नित्यशब्दः।

### 3.0 पक्षनिर्धारणम्

**संग्रह एतत् प्राधान्येन परीक्षितम्-नित्यो वा स्यात् कार्यो वेति। तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः-यद्येष नित्यः, अथापि कार्यः, उभयथाऽपि लक्षणं प्रवर्त्यमिति॥**

अयमाशयः-**संग्रहे**=व्याडिकृते लक्षसंख्यश्लोकात्मके ग्रन्थे । **एतत्**=शब्दः नित्यो वा कार्यो वेत्यंशः। **प्राधान्येन**=महता प्रबन्धेन **परीक्षितम्**=बहुभिः प्रकारैः विमृष्टम्। **नित्यो वा स्यात्**=शब्दः किं नित्यः भवितुमर्हति वा, **कार्यो वेति**=अनित्यः स्याद्वा इति। **तत्र**=शब्दस्य नित्यत्वे, अनित्यत्वे च। **उक्ता दोषाः**=दोषाः कथिताः। **प्रयोजनान्यपि**= शब्दानां नित्यत्वेऽनित्यत्वे च फलानि च **उक्तानि**=निरूपितानि। **तत्र**=द्विविधे विचारे कृते सति। **एष निर्णयः**=अयं सिद्धान्तः कृतः यथा-**यद्येव नित्यः**=शब्दः नित्यो वा भवतु, **अथापि कार्यः**=अथवा अनित्यो वा भवतु, **उभयथाऽपि**=शब्दस्य नित्यत्वे, अनित्यत्वे च। **लक्षणम्**=व्याकरणसूत्रम्। **प्रवर्त्यमेवेति**=अवश्यं प्रवर्तनीयमेवेति। एवञ्च शब्दस्य नित्यत्वानित्यत्वविचारः निष्फलः एव। शब्दस्य अनित्यत्वे व्यापकस्य विकाराभावात् "इको यणचि" 6-1-77 इत्यादौ इकः स्थाने यण् न स्यात्। यतः कार्यत्वे तच्छब्दानन्तर्यरूपसंहितायाः अभावात् यणादेशो न स्यादित्यादयः दोषाः। "इको यणचि" 6-1-77 इत्यादिना साधुत्वमात्रं क्रियते इत्यादीनि प्रयोजनानि। एवञ्च साधुत्वज्ञानाय उभयथाऽपि शास्त्रमावश्यकम् - इति।

### 4.0 शब्दार्थसंबन्धविषयिणी शङ्का

**कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्?**

अयमाशयः-**भगवतः पाणिनेः आचार्यस्य**=पूज्यस्य महर्षेः पाणिनेः। **लक्षणम्**=सूत्रम्। **कथम्**=कया वा रीत्या। **प्रवृत्तम्**= प्रणीतमित्यर्थः। किं भगवान्

पाणिनिरेव शब्दानाम्, तदर्थानाम्, शब्दार्थसंबन्धानां च स्रष्टा, उत स्मर्ता? इति प्रश्नः। एवञ्च किमपूर्वशब्दनिष्पादनद्वाराऽर्थविशेषस्य, तयोश्शब्दार्थयोः सम्बन्धनिष्पादकमिदं पाणिनीयं व्याकरणम्, अथवा सिद्धानां शब्दार्थसंबन्धानां बोधकमिति प्रश्नस्य अर्थः - इति।

## 5.0 शब्दार्थसंबन्धानां नित्यत्वप्रतिपादनम्

**सिद्धे शब्दार्थसंबन्धे।**

**सिद्धे शब्देऽर्थे संबन्धे चेति॥**

अयमाशयः-शब्दश्च अर्थश्च सम्बन्धश्च एतेषां समाहारः=शब्दार्थसबन्धम्, तस्मिन्=शब्दार्थसम्बन्धे इति समाहारद्वन्द्वः। तथा च शब्दे, अर्थे, सबन्धे च सिद्धे सति भगवतः पाणिनेः लक्षणं प्रवृत्तमित्यर्थः। अत्र सम्बन्धश्च प्रत्यासत्त्या शब्दार्थयोरेव। अनयोः शब्दार्थयोः सम्बन्धः शक्तिरूपं तादात्म्यमेव।

## 6.0 सिद्धशब्दार्थे प्रश्नः

**अथ सिद्धशब्दस्य कः पदार्थः?**

लोके सिद्धशब्दः नित्येऽर्थेऽनित्ये चार्थे प्रयुज्यते। अतः प्रकृते वार्तिके सिद्धशब्दोऽयं कस्मिन्नर्थे प्रयुज्यते? इति प्रष्टुः आशयः।

## 7.0 सिद्धशब्दार्थविवरणम्

**नित्यपर्यायवाची सिद्धशब्दः।**

**कथं ज्ञायते?**

**यत् कूटस्थेष्वविचालेषु भावेषु वर्तते। तद्यथा-सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशमिति।।**

अयमाशयः-**नित्यपर्यायवाची सिद्धशब्दः**=नित्यलक्षणस्यार्थस्य पर्यायेण वाचकः, तमेव अर्थं कदाचित् “नित्य”शब्दः बोधयति, कदाचित् “सिद्ध”शब्दः बोधयति।

सिद्धशब्दः नित्यपर्यायवाची इत्यत्र किं मानम्? इत्याशयेन प्रश्नः क्रियते यथा **"कथं ज्ञायते?"** इति। अस्य प्रश्नस्य समाधानमुक्तम् **"यत् कूटस्थेषु.....सिद्धमाकाशमिति"** इति। कूटः=अयोघनम्। "अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्" इति कोशात्। तद्वत् तिष्ठन्ति ये तेषु=कूटस्थेषु। अविनाशिषु इत्यर्थः। अविचालिषु=देशान्तर-प्राप्तिरहितेषु। अत्र दृष्टान्तः - सिद्धा द्यौः इत्यादिषु स्थलेषु रूढत्वात् नित्यवाचकस्यैव सिद्धशब्दस्य ग्रहणम् - इति।

**8.0 सिद्धशब्दार्थविषयकः आक्षेपः**

**ननु च भोः! कार्येष्वपि वर्तते। तद्यथा-सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूरिति। यावता कार्येष्वपि वर्तते, तत्र कुत एतत्-नित्यपर्यायवाचिनो ग्रहणम्, न पुनः कार्ये यः सिद्धशब्द इति।**

आक्षेप्तुः अयमाशयः-**कार्येष्वपि**=अनित्येष्वपि अर्थेषु **वर्तते**=सिद्धशब्दस्य प्रयोगः वर्तते। अत्र दृष्टान्तः-**तद्यथा**....इत्यादिना **यवागूरिति** इत्यन्तेन। तथा च सिद्ध ओदनः इत्यादिषु प्रयोगेषु सिद्धशब्दस्य अनित्येष्वपि पदार्थेषु प्रयोगस्य स्थित्या कथमत्र नित्यपर्यायस्यैव ग्रहणमित्याशयेन आक्षिप्तं **यावता**.....इत्यादिना **सिद्धशब्द इति** इत्यन्तेन - इति।

**9.0 नित्यपर्यायवाचित्वे प्रमाणम्**

**संग्रहे तावत् कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति। इहापि तदेव॥**

समाधातुः अयमाशयः-**संग्रहे**=महर्षिव्याडिप्रणीते संग्रहनामके ग्रन्थे। **कार्यप्रति-द्वन्द्विभावात्**= "किं कार्यः शब्दः अथ नित्यः?" इत्येवं पक्षद्वयविचारः कृतः। तत्र ग्रन्थे कार्यप्रतिपक्षार्थाभिधायी सामर्थ्यात् "सिद्ध"शब्दः इति स्थितम्। **इहापि तदेव**=तत्समानतन्त्रत्वात् प्रकृतेऽपि सिद्धशब्दः नित्यपर्याय एवेति लभ्यते - इति।

10.0 प्रकारान्तरेण समाधानम्

**अथवा सन्त्येकपदान्यवधारणानि। तद्यथा - अब्भक्षो वायुभक्ष इति, अप एव भक्षयति-वायुमेव भक्षयतीति गम्यते।**

**एवमिहापि-सिद्ध एव, न साध्य इति।।**

अस्य प्रश्नस्य समाधानान्तरमुक्तम् - **अथवा......**इत्यादिना **न साध्य** इत्यन्तेन। द्वितीयस्य समाधानस्यास्य अयमाशयः-एकं पदं येषु तानि=**एकपदानि**। वृत्यर्थावबोधकानि। तानि च **अवधारणानि**=निश्चयार्थबोधकानि। अत्र दृष्टान्तः उक्तः **तद्यथा** इत्यादिना **गम्यते** इत्यन्तेन। अब्भक्षः, वायुभक्षः इत्यादिषु शब्देषु यद्यपि अवधारणार्थबोधकः "एव" इति शब्दः न श्रूयते, तथापि अवधारणार्थः लोके प्रतीयते एव। अबतिरिक्तस्य, वाय्वतिरिक्तस्य च भक्षणाभावः लभ्यते। **इहापि**= "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकेऽपि सिद्धशब्दोत्तरम् "एव" शब्दस्य अभावेऽपि **सिद्ध एव, न साध्यः** इत्यर्थः लभ्यते। तथा च शब्दः, अर्थः, तत्सम्बन्धश्च सिद्धः=सिद्धः एव=नित्यः एव इत्यर्थः आयाति - इति।



11.0 प्रकारान्तरेण समाधानम्

**अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः-अत्यन्तसिद्धः=सिद्ध इति। तद्यथा - देवदत्तः-दत्तः, सत्यभामा-भामेति॥**

अयमाशयः - "ठाजादावूर्ध्वं द्वितीयादचः" 5-3-83 इति सूत्रेण ठप्रत्यये, अजादौ च प्रत्यये परे द्वितीयादचः परस्य शब्दस्य लोपः विहितः। यथा-अनुकम्पितः देवदत्तः इत्यर्थे "बह्वचो मनुष्यनाम्नष्ठज्वा" 5-3-78 इति सूत्रेण देवदत्तशब्दात् विहिते ठच् प्रत्यये परे दत्तशब्दस्य लोपः प्रोक्तः। अत्र वार्तिकमिदं दृश्यते यथा - "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः" इति। उदा - देवदत्तः, दत्तः, देवः। एवं सत्यभामा, भामा,

सत्या - इति। एवमेव प्रकृतेऽपि "अत्यन्तसिद्ध" इति शब्दे अनेन वार्तिकेन अत्यन्तशब्दस्य लोपे सति अवशिष्टः सिद्धशब्दः अत्यन्तसिद्धशब्दार्थं बोधयति। तत्र अत्यन्तसिद्धो नाम नित्यः इत्येव अर्थः।

अनया रीत्या "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिके सिद्धशब्दः नित्यार्थबोधकः इति सिद्धम् - इति।

**12.0 पुनः प्रकारान्तरेण समाधानम्**

**अथवा "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्" इति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः।**

अयमाशयः - "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" 6-4-77 इति सूत्रे "य्वोः" इति शब्देन इकार-उकारयोः ग्रहणम्। अत्र तयोः ग्रहणाय लाघवात् "य्वोः" इत्यस्य स्थाने "इणः" इति निर्देशे कर्तव्ये तदकरणेन परिभाषेयं ज्ञापिता यथा - "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्" इति। यत्र क्वचिदपि सन्देहः अस्तीत्येतावन्मात्रेण शास्त्रम् अलक्षणम्=अननुष्ठापकं न भवतीति तदर्थः। तथा च "इणः" इत्यनिर्दिश्य "य्वोः" इति गुरुभूतेन निर्देशेन इण् शब्देन माहेश्वरसूत्रघटकेन परणकारेण प्रत्याहारः शास्त्रसम्मत इति ज्ञाप्यते। प्रकृते सूत्रे = "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" 6-4-77 इति सूत्रे तद्वारणाय गुरुभूतः "य्वोः" इति निर्देशः स्वीकृतः। 'इणः' इति निर्देशे तिस्रः मात्राः 'य्वोः' इत्युक्ते सार्धतिस्रः मात्राः। एवमेव प्रकृते "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिके अनया परिभाषया "सिद्ध"शब्दः नित्यपर्यायवाची गृह्यते इति व्याख्यायते। अतो न दोष इति भावः - इति।

**13.0 अत्राक्षेपः**

**किं पुनरनेन वर्ण्येन। किं न महता कण्ठेन नित्यशब्द एवोपात्तः, यस्मिन्नुपादीयमानेऽसन्देहः स्यात्?**

अयमाशयः-वार्तिककृता एतादृशस्य सन्देहजनकस्य "सिद्ध" शब्दस्य उच्चारणम्, तत्समर्थनाय च बहुविधस्य व्याख्यानस्य आश्रयणापेक्षया सुस्पष्टमेव "सिद्ध"शब्दस्य स्थाने "नित्य"शब्दः एव कुतः नोच्चारितः - इति।

14.0 अत्रोत्तरम्

**मङ्गलार्थम्**

**माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति॥**

समाधातुः अयमाशयः-आक्षेप्त्रा उक्तया रीत्या वार्तिके "नित्य"शब्दमप्रयुज्य "सिद्ध"शब्दस्य प्रयोगे कारणं मङ्गलमेव। एवञ्च **मङ्गलार्थम्** इत्यत्र मङ्गलम् अर्थः=प्रयोजनं यस्य तत् इति विग्रहः। मङ्गलम्=अगर्हिताभीष्टार्थसिद्धिः।

मङ्गति हितार्थं सर्पति, अथवा मङ्गति दुरदृष्टमस्मात् सर्पति इत्यर्थे मगि सर्पणे इति धातोः मङ्गेरलच् इत्युणादिसूत्रेण अलच् प्रत्ययः। अत्रामरसिंहः –

**श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्।**

**प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्।**
**एतद्धि मङ्गलं प्रोक्तं ऋषिभिस्तत्त्वदर्शिभिः॥**

तत्प्रयोजनः आचार्यः **माङ्गलिकः**। "प्रयोजनम्" 5-1-109 इति सूत्रेण ठक् प्रत्ययः। अत्र **आचार्य** शब्देन वार्तिककारः भगवान् कात्यायनः गृह्यते। **महतः**=अत्यन्तं विस्तृतस्य। शास्त्रौघस्य=शब्दशास्त्राख्यस्य प्रवाहस्य।

**ओघो वृन्दोऽम्भसां रये।** इत्यमरः।

**आदितः**=आदौ। **सिद्धशब्दम्**="सिद्ध" इति शब्दम्। **प्रयुङ्क्ते**=प्रयुनक्ति।अत्र मङ्गलानुष्ठानस्य प्रयोजनानि प्रोक्तानि क्रमेण यथा – 1. **मङ्गलादीनि**=मङ्गलम्

आदि येषां तानि। **शास्त्राणि**= व्याकरणादीनि। **प्रथन्ते**=विख्यान्ति। प्रथ-प्रख्याने इति भौवादिकेः धातुरत्र। 2. **वीरपुरुषाणि**=वीराः पुरुषाः येभ्यः तानि। श्रोतृणां परैः पराजयाभावात् शास्त्राणि वीरपुरुषाणि भवन्ति। 3. **आयुष्मत्पुरुषाणि**=आयुष्मन्तः पुरुषाः येभ्यः तानि। शास्त्रार्थानुष्ठाने धर्मोपचयात् आयुषः वर्धनं भवति।

**आयुर्जीवितकालो ना**

**जैवातृकः स्यादायुष्मान्**

इति चामरः। 4. **अध्येतारः**=शास्त्राध्ययनकर्तारः पुरुषाः। **सिद्धार्थाः**=अध्ययन-समाप्तिरूपा या सिद्धिः,तद्वन्तः। **यथा स्युः**=येन प्रकारेण भवेयुः, यद् शब्दात् 'प्रकारवचने थाल्' 5-3-33 इति थाल् प्रत्ययः। तदर्थं वार्तिककारैः आदौ सिद्धशब्दः प्रवृत्तः - इति।

**अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते।**

**किं तर्हि?**

**आभीक्ष्ण्येऽपि वर्तते। तद्यथा - नित्यप्रहसितो नित्यप्रजल्पित इति। यावता आभीक्ष्ण्येऽपि, तत्राप्यनेनैवार्थः स्यात्- "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्" इति। पश्यति त्वाचार्यो मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति, शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितुमिति।**

**अतः सिद्धशब्द एवोपात्तो न नित्यशब्दः॥**

अयमाशयः-**अयं खलु नित्यशब्दः**=लोके प्रयुज्यमानः "नित्य"शब्दः। **नावश्यं कूटस्थेष्वविचालिषु भावेषु वतते**=पूर्वोक्तरीत्या द्यौः, पृथिवी, आकाशमित्यादिषु

अविनाशिषु अर्थेष्वेव न प्रयुज्यते, किन्तु **आभीक्ष्ण्येऽपि वर्तते**=बाहुल्येऽपि अर्थे प्रयुज्यते। अत्र दृष्टान्तः-**नित्यप्रहसितः, नित्यप्रजल्पितः इति**। यः पुरुषः अतिशयेन हसन् भवति, यश्च वा पुरुषः अतिशयेन जल्पन् भवति तत्रापि नित्यशब्दः प्रयुज्यते। तथा च **यावता**=येन हेतुना। **आभीक्ष्ण्येऽपि**=अतिशयितेऽपि अर्थे प्रयुज्यते, **तत्रापि**=तादृशेऽपि अर्थे। **"व्याख्यानतो विशेषप्रतिपत्तिः" इत्यनेनैव**=अनेन नियमेनैव। **अर्थः स्यात्**=प्रयोजनं साधनीयं भवेत्। एवञ्च "नित्य"शब्दोपादानेऽपि सप्रयोजनकोट्यन्तरसम्भवेन तत्रापि सन्देह एव। "नित्ये शब्दार्थसम्बन्धे" इत्यस्य शब्दार्थसम्बन्धे ज्ञाते सति, नित्ये=नित्यशब्दप्रयोगविषये शब्दे शास्त्रं प्रवृत्तमित्यर्थः स्यादिति भावः। **आचार्यः**=वार्तिककारः। **पश्यति**=एवं बोधयति। **सिद्धशब्दः**=वार्तिके प्रयुक्तः सिद्धशब्दः। **मङ्गलार्थश्चैव**=मङ्गलफलकोऽपीत्यर्थः। मङ्गलातिशये फलातिशयसम्भवेन मङ्गलार्थत्वमुपेक्ष्य अन्यथासिद्धत्वकथनमयुक्तमिति भावः। **आदितः**= आद्ये वार्तिके। आदिशब्दात् 'आद्यादिभ्य उपसंख्यानम्' इति सार्वविभक्तिकः तसि प्रत्ययः। **प्रयुक्तो भविष्यति**=प्रयोक्ष्यते। **एनं च**=इमं च सिद्धशब्दम्। **नित्यपर्यायवाचिनम्**=नित्यपर्यायबोधकमिति। **वर्णयितुम्**=अभिवर्णयितुम्। **शक्ष्यामीति**= प्रभविष्यामीति। शक्लृ शक्ताविति धातोः लृट्।

अनया रीत्या वार्तिके नित्यशब्दं परित्यज्य सिद्धशब्दस्यैव ग्रहणे विस्तरेण हेतुः प्रतिपादितः - इति।

## 15.0 पाठस्य सारः

एतावता अस्मिन् पाठे शब्दस्य नित्यत्वे, अनित्यत्वे वा पाणिन्युक्तानि लक्षणानि प्रवर्तन्ते एवेति प्रतिपादितम्। लोके प्रयुज्यमानानां शब्दानाम्, तदर्थानाम्, शब्दार्थसंबन्धानां च पाणिनिः न सृष्टिकर्ता, किन्तु अनादिसिद्धमिदं सः स्मरति केवलमिति निरूपितम्। सिद्धशब्दः लोके यद्यपि नित्येषु, अनित्येषु च अर्थेषु प्रयुज्यते। किन्तु 'सिद्धे शब्दार्थसंबन्धे' इति वार्तिके तु नित्यपर्यायवाची एव गृह्यते इति व्यवस्थापितम्। नित्यशब्दमेव कुतो नोच्चारितवान् वार्तिककारः? इति आक्षेपे मङ्गलार्थं नित्यशब्दमनुच्चार्य सिद्धशब्दः एव उच्चारितः इति समाधानमुक्तमित्येते अंशाः विस्तरेण चर्चिताः।